## ॥ अथ प्रशस्तिः ॥

तीर्थोद्धर्तु र्मुनिगणपते र्नीतिसूरेः सुपट्टे, सिद्धान्ताब्धिः सदयहृदयो हर्षसूरिश्चकाशे ।
तत्पट्टाप्तो विदितमहिमा सूरिराजो जिनेन्द्र–स्तच्छिष्यः पद्मविजयमुनिः श्रीगुरूणां कृपाभिः ॥ १ ॥
सोऽहं श्रीऋषिमण्डलार्चनमिदं संयोज्य शत्रुञ्जये, वेदाक्ष्यम्बरबाहु (२०२४) वैक्रमसमे सौम्ये सिते चाश्विने ।
साण्डेराव–जिनेन्द्र–भव्यभवनेऽयच्छं दशम्यांतिथौ, सर्वेषां जिनभक्तिभावमनसां, गातुं जिनं सेवितुम् ॥ २ ॥
यावत् सिद्धगिरिः प्रसिद्धमहिमा, यावज्जिनेन्द्रः सुरो- यावद् भारतभूः पवित्रचरित्रा, यावच्च शत्रुञ्जया (नदी) ।
यावच्चेप्सितदोऽखिलागमरसो, मन्त्रो नमस्कारक–स्तावच्छ्रीऋषिमण्डलार्चनमिदं भव्याङ्गणे शोभताम् ॥ ३ ॥

॥ इति प्रशस्तिः ॥

श्री ऋषिमण्डल महायन्त्र पूजनविधिः
॥ १६ ॥

## ॥ अथ विसर्जनविधिः ॥

विसर्जन मुद्राए श्वास रेचक करतां (छोडतां) देवोंनु' विसर्जन करवु'—

विसर्जन पाठः— ॐ ह्रीँ श्रीँ श्रीऋषिमण्डलयन्त्रस्था वृषभादि-वर्धमानान्ता जिना अर्हदादयश्च मम हृदये स्थापिताः साधिष्ठायकदेवा देव्यादयश्च ममोपरि प्रसादमवधार्य स्वस्थानं गच्छन्तु गच्छन्तु पुनरागमनाय प्रसीदन्तु प्रसीदन्तु स्वाहा ।

आ मंत्र भणी यन्त्र ना ऊपर पुष्पांजलि वधावी लाल वस्त्रथी यंत्र ने आच्छादन करवु'। पछी दरेके १२-१२ नवकार मौन पणे गणवा ।

॥ इति विसर्जनविधिः ॥

॥ इति श्री ऋषिमण्डलमहायन्त्रपूजनविधिः ॥

★

## ॥ अथ क्षमापना प्रार्थना ॥

आज्ञाहीनं क्रियाहीनं, मन्त्रहीनं च यत्कृतम् । तत्सर्वं कृपया देवाः, क्षमन्तु परमेश्वराः ॥ १ ॥

आह्वानं नैव जानामि, न जानामि विसर्जनम् । पूजाविधिं न जानामि, प्रसीद परमेश्वर ! ॥ २ ॥

सर्वमङ्गलमाङ्गल्यं, सर्वकल्याणकारणम् । प्रधानं सर्वधर्माणां, जैनं जयति शासनम् ॥ ३ ॥

आ काव्य त्रणवार भणी त्रण वखत खमा० देवापूर्वक अपराधनी क्षमापना मांगवी ।

★

आ ऊपरथी पाठ भणतां भणतां अष्टमंगलनो घडो ते छाणेला स्नात्रजलथी अखंड धारावडे भरवो। अंदर पांच नागर वेलना पान, पंचरत्न पोटली तथा ऊपर श्रीफल मूकी लीला वस्त्रवडे बांधी वरख लगाडी, केसरपूजा करी पुष्पनो हार पहेरावी सौभाग्यवती स्त्रीना मस्तके धारण करावी प्रभुजीनी त्रण प्रदक्षिणा आपी वाजतां गाजतां धवल मंगल गीतपूर्वक घेरे लई जवो।

॥ इति शान्तिदण्डकम् ॥

卐

श्री ऋषि मण्डल महायन्त्र पूजनविधिः
॥ १३ ॥

ॐ इन्द्रा-ग्नि-यम-नैरृति-वरुण-वायु-कुबेरे-शान-ब्रह्म-नागेन्द्रा-दशदिक्पाला विघ्नप्रशान्तिकरा भवन्तु भवन्तु।

ॐ श्री-ह्रीँ-धृति-लक्ष्मी-गौरी-चण्डी-सरस्वती-जया-ऽम्बा-विजया-क्लिन्ना-ऽजिता-नित्या-मदद्रवा-कामाङ्गा कामबाणा-सानन्दा-ऽऽनन्दमालिनी-माया-मायाविनी-रौद्री-कला-काली-कलिप्रिया-देवताः सानुकूलाः सौख्यप्रदा वरदाश्च भवन्तु भवन्तु।

समस्त साधु-साध्वी-श्रावक-श्राविकाणां-राजामात्य-पुरोहित-सामन्त-श्रेष्ठि-सार्थवाहप्रभृतिसमग्रलोकानां च स्वस्ति-शिव-शान्ति-तुष्टि-पुष्टि-श्रेयः समृद्धिवृद्धयो भवन्तु भवन्तु।

चौरारि-मारि-रोगोत्पातानीति-दुर्भिक्ष-डमर-विग्रह-ग्रह-भूत-प्रेत-पिशाच-पुद्गल-शाकिनीप्रभृतिदोषाः प्रशाम्यन्तु प्रशाम्यन्तु, ॐस्वाहाः ॐ श्री पार्श्वनाथाय स्वाहा, ॐ भूर्भुवः स्वः स्वाहा।

शिवमस्तु सर्वजगतः, परहितनिरता भवन्तु भूतगणाः। दोषाः प्रयान्तु नाशं, सर्वत्र सुखी भवतु लोकः ॥१॥
उपसर्गाः क्षयं यान्ति, छिद्यन्ते विघ्नवल्लयः। मनः प्रसन्नतामेति, पूज्यमाने जिनेश्वरे ॥ २ ॥
सर्व मङ्गल माङ्गल्यं, सर्व कल्याण कारणम्। प्रधानं सर्वधर्माणां, जैनं जयति शासनम् ॥ ३ ॥

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ९२ ॥

ॐ द्वात्रिंशत् कूटाक्षरेभ्यो नमः। ॐ स्वराद्यष्टवर्गयुतपिण्डाक्षरेभ्यो नमः। ॐ गणधिपति गौतम स्वामिने नमः। ॐ सद्गुरुपादुकाभ्यो नमः। ॐ द्वादशलब्धिधारकमहर्षिभ्यो नमः। ॐ अणिमाद्यष्टमहासिद्धिभ्यो नमः। ॐ नैसर्पिकादिनवनिधिभ्यो नमः।

ॐ पुण्याहं, पुण्याहं, प्रीयन्तां, प्रीयन्ताम्।

अस्मिन् जम्बूद्वीपे भरत क्षेत्रे दक्षिणार्ध भरते मध्यखण्डे——देशे————————नगरे ————————प्रासादे ( मंडपे वा )——————- सान्निध्ये——————————कारिते श्री ऋषिमण्डल महापूजन महोत्सवे चतुर्विंशति तीर्थङ्करादयो भगवन्तो मयि प्रसन्ना भवन्तु; भवन्तु मां संरक्षन्तु संरक्षन्तु।

ॐ भवनपति-व्यन्तर-ज्योतिष्क-वैमानिकाश्चतुः षष्टिसुरासुरेन्द्राजयं मङ्गलं सर्वसमीहितं च कुर्वन्तु कुर्वन्तु।

ॐ श्री ऋषिमण्डलाधिष्ठायक धरणेन्द्र-पद्मावती-वैरोट्याप्रभृति-देवदेव्यः शान्तिकरा भवन्तु भवन्तु।

ॐ सूर्य-चन्द्र-मंगल-बुध-बृहस्पति-शुक्र-शनैश्चर-राहु-केतु नामानो नवग्रहाः सक्षेत्रपालाः सानुकूला भवन्तु भवन्तु।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ९१ ॥

## ॥ अथ शान्तिदण्डकम् ॥

प्रथम स्नात्रनुं जल गालीने ( छांणीने ) अेक अष्टमङ्गलनो घडो लई शुद्ध जलथी धोई धूपी तेमां केशरनो स्वस्तिक करी अंदर पुष्पांजलि सोपारी अने १। रुपीयो मूकी "शान्तिदण्डक" नो पाठ भणवो। पहेलां नवकार भणी नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः बोली—

ॐ पञ्चरुकू ह्रीँकारस्थ चतुर्विंशतिजिनयुत श्रीऋषिमण्डलाय नमो नमः। ॐ त्रैलोक्यबीज-जिनराज बीज–महामायाबीज भूताय परमार्हते नमो नमः।

ॐ ऋषभ–अजित–संभव–अभिनन्दन–सुमति–पद्मप्रभ–सुपार्श्व–चन्द्रप्रभ–सुविधि–शीतल–श्रेयांस वासुपूज्य–विमल–अनन्त–धर्म–शांति–कुन्थु–अर–मल्लि–मुनिसुव्रत–नमि–नेमि–पार्श्व–वर्धमानजिन कदम्बकाय नमो नमः।

ॐ अर्हद्भ्यो नमः। ॐ सिद्धेभ्यो नमः। ॐ आचार्येभ्यो नमः। ॐ उपाध्यायेभ्यो नमः। ॐ सर्व-साधुभ्यो नमः। ॐ सम्यग्ज्ञानाय नमः। ॐ सम्यग्दर्शनाय नमः। ॐ सम्यक्चारित्राय नमः।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ६० ॥

आ स्तवन भण्या पछी जयवीयराय०—सम्पूर्ण पाठ भणवो, पछी अरिहंत चेइयाणं०, अन्नत्थ० बोलीने अेक नवकार नो काउसग्ग करीने ।

ॐ नमोऽर्हत्०—

—:: स्तुतिः ::—

ह्रीँकारं जिनरूपमङ्गलमयं कूटाक्षरैरन्वितं,
सर्वज्ञावलिशोभितं श्रुतयुतं, सूरीश्वराद्यैः स्तुतम्।
सद्वाच्यमिदं जगत्त्रयहितं, कल्पद्रुकल्पोपमं,
वन्दे श्रीऋषिमण्डवलं भवहरं, यन्त्राधिराजं मुदा ॥१॥

॥ इति चैत्यवन्दनम् ॥

卐

ज्योतिष्का भवनाधिपाश्च परितो वैमानिकाव्यन्तरा, देवाये जिनभक्ति भावनिरता, वन्दामहे तान्वयम् ।
तत्पश्चादथ पञ्चमे च वलये, ये वै मुनीशाः श्रुताऽ–वध्यादिप्रिय लब्धिधारणपरा, स्तान् प्रार्थयामोऽन्वहम् ॥ ६ ॥
षष्ठे वै वलये स्मरामि किल षट् पञ्चाशता संख्यया; ख्याता द्वीपगणास्तदन्तरभुवि, क्षारोदधिं भावये ।
ऊर्ध्वं ह्रीँ स्थितिमेत्यधस्तलमिह, क्रौँ यस्य प्रोच्चारणे, यन्त्रं सार्धत्रिरेखयावृतमिदं, सर्वोत्तमं राजते ॥ ७ ॥
विद्यन्ते धरणेन्द्रकादिवहवो, देवा अधिष्ठायकाः, सूर्यश्चन्द्रकुजादिकास्तु वलये. यस्य ग्रहाः सप्तमे ।
शोभन्ते वलयेऽष्टमे दशदिशा, मीशा महेन्द्रादयः, श्री ह्रीत्यादिसुरीगणाश्च नवमे, पूजार्थमेत्यस्थिताः ॥ ८ ॥
यन्त्रेऽस्मिन् कलशाकृतौ विलसिता, अष्टौ महासिद्धयः, षष्ठं भागमुपास्य भान्ति खलुता, नाम्नाऽणिमाद्याः शुभाः ।
मूले सन्ति नवापि ते सुनिधयो, नैसर्पिकाद्याः खलु, चक्रेऽत्रार्पिगणस्य सर्वजगतां, भावाभृताः सर्वतः ॥ ९ ॥
शांतिं तुष्टिमनेकशो भुवि महा-सिद्धिं प्रदद्यादिदं, पूर्वाचार्यकृतं श्रयन्तु भविनो, भक्त्या स्वशक्त्या सदा ।
सर्वारिष्टविनाशनाय मनसा, यन्त्रं भजन्तो जना-लप्स्यन्ते सकलानि लौकिकसुखा-न्यत्रास्ति नो संशयः ॥१०॥

श्री नीतिसूरि पदभक्त प्रसिद्ध हर्ष—सूरेर्विनेय इह प्राज्ञजिनेन्द्रसूरिः ।
कृतं जनाना—मिष्टाप्तये स्तुतिपदं सकलार्थदायि ॥ ११ ॥

## ॥ श्री ऋषिमण्डल यन्त्र स्तवनम् ॥

स्तवनम्— ऋषिगणस्य प्रसिद्धमिदं गृहं, जगति यन्त्रवरं कलशाकृति ।
सकलमङ्गलभावविधायकं, स्तवनमस्य वयं किल कुर्महे ॥ १ ॥

ह्रीँकारं प्रथमे नमामि वलये, सर्वार्थसिद्धिप्रदं, यद्वेदाक्षि (२४) जिनेन्द्रमण्डलयुतं, यन्त्रं हि सर्वोत्तमम् ।
ह्रीँकारः सशिरस्ततोरहयुतश्चेकारयुक्ताक्षरः, शान्तः स्वीयसुनादबिन्दुकलयो, पेतः प्रियो वर्ण्यते ॥ २ ॥
द्वात्रिंशन्मितकूटवर्णनिचयान्, सर्वेष्टसिद्धिप्रदान्, भावेनाथनुमो द्वितीयवलये, वावर्तमानान् वयम् ।
पञ्चानां परमेष्ठिनां शुभपदं, खण्डे तृतीये स्थितं, ज्ञानेनान्वितदर्शनस्य चरितस्याष्टात्मकं तन्तुयः ॥ ३ ॥
तुर्य्ये वै वलये क्रमेण लसिता, नादीन् पुनर्हान्तकान्, वर्गानष्टप्रकारकान् प्रचलितान्, पिण्डाक्षरान् वाङ्मयान् ।
ध्यायामो नितरां प्रभातसमये, सायं क्षपायां दिने, यद्ध्यानेन लभामहे प्रतिपलं,शांतिं सुखं स्वात्मनि ॥ ४ ॥
यन्त्रस्यास्यहि दक्षिणे गणभृतं, संस्थापितं गौतमं, शान्तं भक्तियुतः प्रशान्तमनसा संप्रार्थयामीष्टदम् ।
पूज्याः श्रीगुरुपादुका गतमला एतस्य वामेस्थिता— स्तावन्दे सकलेष्टसाधनपराः, स्वर्गापवर्गप्रदाः ॥ ५ ॥

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ८७ ॥

॥ चैत्यवन्दनम् ॥

प्रथम इरियावही करी खमासमणु देवु । पछी इच्छाकारेण संदिसह भगवन् चैत्यवन्दन करुं ! इच्छं ।

॥ चैत्यवन्दनम् ॥

सकलकुशलवल्ली--पुष्करावर्तमेघो, दुरित–तिमिर–भानुः कल्पवृक्षोपमानः ।
भवजलनिधिपोतः सर्वसम्पत्तिहेतुः, स भवतु सततं वः श्रेयसे शान्तिनाथः ( श्रेयसे पार्श्वनाथः ) ॥ १ ॥

पद्मप्रभः सुरक्ताभो, वासुपूज्यस्तथाऽरुणः । चन्द्रप्रभो जिनः श्वेतः, सुविधिनाथसंयुतः १ ॥
पार्श्वनाथो हि नीलाभो, मल्लिनाथश्च नीलभः । मुनिसुव्रततीर्थेशः, श्यामलो नेमितीर्थपः ॥ २ ॥
वृषभाद्या जिनाः शेषाः, स्वर्णवर्णास्तु षोडश । चतुर्विंशतिसंख्याका, एते रक्षन्तु तीर्थपाः ॥ ३ ॥

पछी जंकिंचि० नमुत्थुणं० जावंतिचेइआइं० खमासमण–जावंतकेविसाहू० ॐ नमोऽर्हत्०—

श्री ऋषि मण्डल महायन्त्र पूजनविधिः

॥ ८६ ॥

॥ अथ जाप्य मूल मन्त्रः ॥

ॐ ह्राँ ह्रीँ ह्रुँ ह्रूँ ह्रेँ ह्रैँ ह्रौँ ह्रः असिआउसा (सम्यग्) ज्ञान-दर्शन-चारित्रेभ्यो (ह्रीँ) नमः ।

[ ॐ ह्रीँ अर्हं नमः ]

[ आ मूल मंत्रनो जाप सकल संघे १०८ वार जपवो ]

जाप कर्या पछी १०८ दीपकनी आरती, अने मंगल दीवो उतारी ने देववन्दन करवुं ।

॥ इति मूलमन्त्र जापादिः ॥

卐

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः

॥ ८५ ॥

॥ फल पूजा ॥ ८ ॥

ॐ नमोऽर्हत्०— आम्र-जम्बीर--नारिङ्ग-कदली-श्रीफलादिभिः ।
महानन्दफलाप्त्यर्थं, यजे श्रीऋषिमण्डलम् ॥ ८ ॥

मन्त्रः— ॐ ह्रीँ श्रीँ ऋषिमण्डलाय फलानि यजामहे स्वाहा ।

[ लीलुं श्रीफल विगरे पांच जातिना फलो धरवा ]

॥ अष्टप्रकार पूजा फलमाहात्म्यम् ॥

का०—नैर्मल्यं जलपूजया प्रभवति, स्वस्येह सद्भावतः, पूजा चन्दनकस्य केशरयुता, सन्ताप-पापाऽपहा ।
पुष्पार्चा सुमनः सुगन्धधरणी, दुर्गन्धनिर्नाशिनी, धूपादूर्ध्वगतिश्च सिद्धिसदने, वासोहि सम्पद्यते ॥ १ ॥
दीप्रैर्मङ्गलदीपकैः किल महा-मोहान्धकारं हतं, स्वस्तिस्वस्तिककारकाक्षतकृता पूजाऽक्षतानन्ददा ।
नैवेद्यैर्विहिताऽस्तु मोदकमयै-र्मिष्टैः सदेष्टप्रदा, पूजा श्रीऋषिमण्डलस्य सुफलै-र्देयाच्च मुक्तेः फलम् ॥ २ ॥

॥ इति यन्त्राष्टप्रकारपूजनम् ॥

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ८४ ॥

मन्त्रः— ॐ ह्रीँ श्रीँ ऋषिमण्डलाय दीपं यजामहे स्वाहा ।

[ यंत्रने दीपक बतावबो ।

॥ अक्षत पूजा ॥ ६ ॥

ॐ नमोऽर्हत्०— सर्वदाऽक्षतसौख्याय, चाक्षतैर्मौक्तिकोज्ज्वलैः ।
स्वस्तिकृत् स्वस्तिकाकारै-र्यजे श्रीऋषिमण्डलम् ॥ ६ ॥

मन्त्रः— ॐ ह्रीँ श्रीँ ऋषिमण्डलाय अक्षताम् यजामहे स्वाहा ।

[ अखंड चोखाओनों नंदावर्त साथियो पूरवो ]

॥ नैवेद्य पूजा ॥ ७ ॥

ॐ नमोऽर्हत्०— मोदकैर्मोदकाद्यैश्च, पक्वान्नैर्गोघृतादिभिः ।
अनाहारिपदप्राप्त्यै, यजे श्रीऋषिमण्डलम् ॥ ७ ॥

मन्त्रः— ॐ ह्रीँ श्रीँ ऋषिमण्डलाय नैवेद्यं यजामहे स्वाहा ।

[ पांच प्रकारनुं नैवेद्य धरवुं ]

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ८३ ॥

॥ पुष्प पूजा ॥ ३ ॥

ॐ नमोऽर्हत्०— मंदारकेतकी--जाति--कजादिकुसुमैः किल ।
अघदुर्गन्धघाताय, यजे श्रीऋषिमण्डलम् ॥ ३ ॥

मंत्रः— ॐ ह्रीँ श्रीँ ऋषिमण्डलाय पुष्पाणि यजामहे स्वाहा ।

[ यंत्रना ऊपर पुष्पहार चढावी पंचवर्णी सुगन्धि पुष्पों वडे पूजा करवी ]

॥ धूप पूजा ॥ ४ ॥

ॐ नमोऽर्हत्०— श्रीखण्डागरुकर्पूर--दशाङ्गधूपधूपनैः ।
सर्वकर्मेन्धनं दग्धुं, यजे श्रीऋषिमण्डलम् ॥ ४ ॥

मंत्रः— ॐ ह्रीँ श्रीँ ऋषिमण्डलाय धूपं यजामहे स्वाहा ।

[ यंत्र सन्मुख दशांगधूप उखेववो ]

॥ दीप पूजा ॥ ५ ॥

ॐ नमोऽर्हत्०— मिथ्याज्ञानतमोहारिं, पञ्चमज्ञानप्राप्तये ।
प्रदीप्तैर्मङ्गलैर्दीपै--र्यजे श्रीऋषिमण्डलम् ॥ ५ ॥

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ८२ ॥

## ॥ अथाष्टप्रकारपूजनम् ॥

### ॥ जल पूजा ॥ १ ॥

ॐ नमोऽर्हत्०— पूतेन तीर्थनीरेण, संसारतापहारिणा ।
आत्ममलविशुद्ध्यर्थं, यजे श्रीऋषिमण्डलम् ॥ १ ॥

मंत्रः— ॐ ह्रीँ श्रीँ ऋषिमण्डलाय जलं यजामहे स्वाहा ।

आ काव्य अने मंत्र भणी जल पूजा करी अंगलूंछणा करवा ।

### ॥ चन्दन पूजा ॥ २ ॥

ॐ नमोऽर्हत्०— आत्मतापविकाशाय, रोग–शोकादिनाशकैः ।
सुगन्धैः श्रीकरैर्ह्द्यै-र्यजे श्रीऋषिमण्डलम् ॥ २ ॥

मन्त्रः— ॐ ह्रीँ श्रीँ ऋषिमण्डलाय चन्दनं यजामहे स्वाहा ।

यंत्रने सोनेरी-रूपेरी वरख छापी चन्दन पूजा करवी ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ८१ ॥

## ॥ पञ्चामृताभिषेक (स्तोत्र) काव्यानि ॥

ॐ नमोऽर्हत् सिद्धाचार्योपाध्यायसर्वसाधुभ्यः ।

पूर्वं जन्मनि मेरु भूध्रशिखरे, सर्वैः सुराधीश्वरैः, राज्योद्भूतिमहे महर्द्धिसहितैः पूर्वेऽभिषिक्ता जिनाः ।
तामेवानुकृतिं विधाय हृदये, भक्तिप्रकर्षान्विताः, कुर्मः स्वस्वगुणानुसारवशतो, यन्त्राभिषेकोत्सवम् ॥ १ ॥

मृत्कुम्भाः कलयन्तु रत्नघटतां, पीठं पुनर्मेरुता-- मानीतानि जलानि सप्तजलधि--क्षीराज्यदध्यात्मताम् ।
यन्त्रं पारगतत्वमत्र सकलः, सङ्घः सुराधीशतां, येन स्यादयमुत्तमः सुविहितः स्नात्राभिषेकोत्सवः ॥ २ ॥

चन्द्रोज्ज्वलेन पयसा दधिमिश्रितेन, संतुष्टिपुष्टिबलदायकगोघृतेन ।
कर्पूरकेसररसालरसैः सुगन्धैर्मुक्तिश्रियेऽस्तु ऋषिमण्डलस्नात्रमत्र ॥ ३ ॥

**मंत्रः—ॐ ह्रीँ श्रीँ क्षीरादिपञ्चामृतकलशैः श्रीऋषिमण्डल यन्त्रं स्नपयामीति स्वाहा ।**

[ ऊपरना काव्यो अने मंत्र बोली पंचामृतना कलशो वडे यन्त्रनो अभिषेक करवो ]

पंचामृतः—दूध--दहीं--घी--साकर--केशर--शुद्धजल अने अत्तर वगेरे सुगन्धि पदार्थ मिश्रित पञ्चामृत तैयार करीने अभिषेक करवो ।

॥ इति यन्त्राभिषेकः (स्नात्रम्) ॥

## ॥ अथ यन्त्राभिषेकः (स्तोत्रम्) ॥

ॐ नमोऽर्हत्०— पुष्पाक्षतादिकाः पुष्पा–ञ्जलयो गन्धवल्लयः ।
श्री ऋषिमण्डलेऽत्रैव, कुर्वन्तु मङ्गलावलिम् ॥ १ ॥

आ काव्य भणी यंत्र ने पुष्पाञ्जलि वडे वधाववुं ।

## ॥ कलशाधिवासनम् ॥

मन्त्रः— ॐ ह्रीँ श्रीँ धृति-कीर्ति-बुद्धि-लक्ष्मी-शान्ति-तुष्टि-पुष्टय एतेषु-अष्टकलशेषु कृताधिवासा भवन्तु भवन्तु स्वाहा ।

आ मंत्र भणतां आठे कलशोनुं वासक्षेप द्वारा अधिवासन करवुं ।

## ॥ पंचामृताभिमंत्रणम् ॥

मंत्रः— ॐ क्षाँ ह्वाँ भ्राँ आँ पाँ क्षीरादि समुद्रोद्भवानि क्षीराद्युदकान्येषु स्नात्रकलशेषु-अवतरन्तु-अवतरन्तु संवौषट् ।

[ आ मंत्रथी वास वडे पंचामृत मंत्रीने आठे कलशोंमां भरवुं ]

## ॥ अथ भूतबलि पूजनम् ॥

बलि-अभिमन्त्रणम्— ॐ ह्रीँ क्ष्वीँ सर्वोपद्रवान् बलि रक्ष रक्ष स्वाहा ।

आ मंत्र २१ वार भणी सवा किलो अडदना बाकुला जेमां पानना टुकडा सोपारी अने खारेकना टुकडा तथा खोपराना टुकडा मेलवेला होय ते बाकुलाओ ने पू० गुरु महाराज सा० पासे वासक्षेप करावबो ।

॥ भूतबलि काव्यम् ॥ १ ॥

का०— भूचराः खेचरा भूता--स्तिर्यग्गा अपि पूजने ।
पूजावलिं समादाय, भवन्तु सङ्घशान्तये ॥ १ ॥

अेक पुरुष हाथमां बलिनो थाल लइ‍ ऊपरनुं तथा नीचे नुं काव्य भणतां मण्डलमां नवनिधिओं नी बन्ने बाजु बाकुला आपे ( मूकवां )

का०— ॐ भवणवइ वाणवंतर, जोइसवासी विमाणवासी अ ।
जे के वि दुट्ठदेवा, ते सव्वे उवसमन्तु मम स्वाहा ॥ २ ॥

॥ इति भूतबलि पूजा ॥

卐

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ७८ ॥

॥ श्री माणवकनिधि पूजा ॥ ८ ॥

का०— सन्नाहाऽऽयुधयोधनां, सम्पदः स्युर्यतो ध्रुवम् ।
माणवं तं निधिं वन्दे, युद्धादिनीतिसम्भवम् ॥ ८ ॥

मंत्रः— ॐ माणवकाय स्वाहा ।

॥ श्री शङ्खनिधि पूजा ॥ ६ ॥

का०— काव्योत्पत्तिश्चतुर्धा स्यात्, नाट्यनाटकयोर्विधिः ।
उद्भवोऽशेषतूर्याणां, चरमात् तं शङ्खमर्चये ॥ ६ ॥

मंत्रः— ॐ शङ्खाय स्वाहा ।

—:: प्रार्थना ::—

का०— श्रीनवनिधयः सन्तु, बुद्धिशुद्धिविधायिनः ।
सम्पूजिता महेऽत्रैव, जयविजयदायिनः ॥ १ ॥

॥ इति नवनिधि पूजनम् ॥

卐

श्री ऋषि मण्डल महायन्त्र पूजनविधिः
॥ ७७ ॥

॥ श्री महापद्मनिधि पूजा ॥ ५ ॥

का०— वस्त्राणां सर्वजातीनां, शुद्धानां रागिणामपि ।
समुत्पत्तिर्यतः स्यात्तं, महापद्मं नमाम्यहम् ॥ ५ ॥

मंत्रः— ॐ महापद्माय स्वाहा ।

॥ श्री कालनिधि पूजा ॥ ६ ॥

का०— शुभाशुभकृपिशिल्य—वाणिज्यशतकर्मणः ।
त्रिकालस्य चिदुत्पत्तिः, स्यात् तं कालं यतो यजे ॥ ६ ॥

मंत्रः— ॐ कालाय स्वाहा ।

॥ श्री महाकालनिधि पूजा ॥ ७ ॥

का०— स्फटिक-मौक्तिक-स्वर्ण-रौप्याऽयो रत्न-विद्रुमाः ।
जायन्ते मणयो यस्मात्, महाकालं तमर्चये ॥ ७ ॥

मन्त्रः— ॐ महाकालाय स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः

॥ ७६ ॥

॥ श्री पाण्डुकनिधि पूजा ॥ २ ॥

का०— मानोन्मान प्रमाणानां, गणितायाऽखिलस्य च ।
धन--धान्यादिकोत्पत्ति--स्तं पाण्डुकनिधिं यजे ॥ २ ॥

मंत्रः— ॐ पाण्डुकाय स्वाहा ।

॥ श्री पिङ्गलनिधि पूजा ॥ ३ ॥

का०— नग्नारीगजाश्वादि-सत्कालङ्कारमालिकाः ।
संजायन्ते निधेर्यस्मात्, तं पिङ्गलंनिधिं यजे ॥ ३ ॥

मंत्रः— ॐ पिङ्गलाय स्वाहा ।

॥ श्री सर्वरत्ननिधि पूजा ॥ ४ ॥

का०— जायन्ते चक्रिरत्नानि, चतुर्दश यतोहि तम् ।
एकपञ्चेन्द्रियात्मानि, सर्वरत्नंनिधिं भजे ॥ ४ ॥

मन्त्रः— ॐ सर्वरत्नाय स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः

॥ ७५ ॥

—:: प्रार्थना ::—

का०— अणिमाद्यष्टसिद्धीनां, महिमा हि महीतले ।
लसति महिमास्ताश्च, लसन्तीहार्चकालये ॥ १ ॥

॥ इत्यष्टमहासिद्धि पूजनम् ॥

卐

## ॥ अथ श्री नवनिधि पूजनम् ॥

ॐ नमोऽर्हत्०— नैसर्पिकादि-शङ्खान्ता, निधयो नव सौख्यदाः ।
श्रीसङ्घोदयकर्तारः, स्युः सर्वे निधिनिर्जराः ॥ १ ॥

पुष्पांजलि वधाववी । [ यंत्रमां गंध अने पुष्पोंथी तथा मंडलमां अखरोटथी पूजन करवुं । अखरोट नग ६ ]

### ॥ श्री नैसर्पिकनिधि पूजा ॥ १ ॥

का०— स्कन्धावारपुरग्रामा–ऽऽकरद्रोणादिसम्भवः ।
यतो भवति तं सेवे, निधिं नैसर्पिकाभिधम् ॥ १ ॥

मंत्रः— ॐ नैसर्पिकाय स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ७४ ॥

॥ श्री प्राप्तिसिद्धि पूजा ॥ ६ ॥

का०— मेरुशृङ्गाग्रसंस्पर्शं, भूस्थः करप्रसारतः।
यया कर्तुमलं स्याद्धि, तां प्राप्तिं प्रणमाम्यहम् ॥ ६ ॥

मंत्रः— ॐ प्राप्तिसिद्ध्यै स्वाहा।

॥ श्री ईशितासिद्धि पूजा ॥ ७ ॥

का०— सुरासुरेन्द्रचक्रयर्द्धि-तीर्थपर्द्धिविकुर्वणा।
शक्तिर्ययाप्यतेऽनल्या-मीशितां तां नमाम्यहम् ॥ ७ ॥

मंत्रः— ॐ ईशितासिद्ध्यै स्वाहा।

॥ श्री वशितासिद्धि पूजा ॥ ८ ॥

का०— भूर्भुवः स्वस्त्रयीमध्ये, जीवाऽजीवाश्च सन्ति ये।
यया ते वश मायान्ति, वशितां तां नमाम्यहम् ॥ ८ ॥

मन्त्रः— ॐ वशितासिद्ध्यै स्वाहा।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः
॥ ७३ ॥

॥ श्री लघिमासिद्धि पूजा ॥ ३ ॥

का०— जायते स्वशरीरस्य, यन्महासिद्धि शक्तितः ।
वायोरपि लघुत्वं तां, लघिमां प्रणमाम्यहम् ॥ ३ ॥

मन्त्रः— ॐ लघिमासिद्धयै स्वाहा ।

॥ श्री गरिमासिद्धि पूजा ॥ ४ ॥

का०— दुःसहत्वमपीन्द्राद्यै--र्वपुषश्च यदा भवेत् ।
वज्रादपि गुरुत्वं तां, गरिमां प्रणमाम्यहम् ॥ ४ ॥

मन्त्रः— ॐ गरिमासिद्धयै स्वाहा ।

॥ श्री प्राकाम्यसिद्धि पूजा ॥ ५ ॥

का०— भूमाविव जले चालो, जलवद् भुवि मज्जनम् ।
यन्महासिद्धि शक्त्या तां, प्राकाम्यां प्रणमाम्यहम् ॥ ५ ॥

मन्त्रः— ॐ प्राकाम्यसिद्धयै स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ७२ ॥

## ॥ अथाष्टमहासिद्धि पूजनम् ॥

[ यन्त्रोपरि ]

ॐ नमोऽर्हत्०— अणिमादिमहासिद्धि--सत्काष्टकं शुभाष्टकम् ।
पुष्पाञ्जलिं समादाया-ऽमन्दानन्दं ददातु नः ॥ १ ॥

आ काव्य भणी पुष्पांजलि वधाववी ।
यंत्रमां गंध अने पुष्पथी तथा मंडलमां जायफल थी अष्टमहासिद्धिओनी पूजा करवी। कुल जायफल ८ ।

### ॥ श्री अणिमासिद्धि पूजा ॥ १ ॥

का०— संप्रविश्य विसच्छिद्रं, तत्राऽपि चक्रवर्तिनः ।
भोगान् भुङ्क्ते ययासिद्ध्या, तामणिमां प्रणमाम्यहम् ॥ १ ॥

मन्त्रः— ॐ अणिमासिद्ध्यै स्वाहा ।

### ॥ श्री महिमासिद्धि पूजा ॥ २ ॥

का०— यदा संजायते शीघ्रं, मेरोरपि महत्तरम् ।
देहवर्धनसामर्थ्यं, महिमां तां नमाम्यहम् ॥ २ ॥

मन्त्रः— ॐ महिमासिद्ध्यै स्वाहा ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ७१ ॥

## ॥ श्री कलिप्रिया देवी पूजा ॥ २४ ॥

का०— माहात्म्यं भुविविख्यातं, कलौ यस्याः प्रवर्तते ।
तीर्थकृत् भक्तियुक्तां तां, यजेदेवीं कलिप्रियाम् ॥ २४ ॥

मन्त्रः— ॐ नमः कलिप्रियायै स्वाहा ।

### —ः प्रार्थना ः—

का०— श्री देव्यादिमहादेव्यो, जिनशासन रक्षिकाः ।
ऋषिमण्डलगाः सन्तु, सदा विघ्नोपशान्तये ॥ १ ॥

॥ इति श्री चतुर्विंशति जिन सेविकादेवी पूजनम् ॥

[ इति नवमवलयम् ९ ]

卐

श्री ऋषि मण्डल महायन्त्र पूजनविधिः
॥ ७० ॥

॥ श्री रौद्रीदेवी पूजा ॥ २१ ॥

का०— रौद्रविघ्नादिनाशाय, रौद्रदेवादिवन्दिताम् ।
जिनेन्द्रोपासिकां देवीं, रौद्रीं रौद्रापहां यजे ॥ २१ ॥

मंत्रः— ॐ नमो रौद्रीदेव्यै स्वाहा ।

॥ श्री कलादेवी पूजा ॥ २२ ॥

का०— नमस्कारमहामन्त्रा–राधिकां जिनसेविकाम् ।
सर्वाभीष्टप्रदां सौम्यां, कलादेवीं सुपूजये ॥ २२ ॥

मंत्रः— ॐ नमः कलादेव्यै स्वाहा ।

॥ श्री कालीदेवी पूजा ॥ २३ ॥

का०— विश्ववन्द्यं जिनाधीशं, पूजयन्तीं सदा मुदा ।
कृष्णाभां दुष्टहन्त्रीं च, कालीदेवीं प्रपूजये ॥ २३ ॥

मंत्रः— ॐ नमः कालीदेव्यै स्वाहा ।

॥ श्री आनन्दमालिनीदेवी पूजा ॥ १८ ॥

का०— गालिनीमुपसर्गालिं, सदानन्दालिशालिनीम् ।
आनन्दमालिनीं सेवे, सद्धर्मारामामालिनीम् ॥ १८ ॥

मन्त्रः— ॐ नमः आनन्दमालिनीदेव्यै स्वाहा ।

॥ श्री मायादेवी पूजा ॥ १९ ॥

का०— कल्याणसदनं देवं, चिन्तयन्तीं स्वमानसे ।
अर्हन्नामाक्षरासक्तां, मायादेवीं नमाम्यहम् ॥ १९ ॥

मंत्र.— ॐ नमो मायादेव्यै स्वाहा ।

॥ श्री मायाविनीदेवी पूजा ॥ २० ॥

का०— यशस्विनीं यशोदां सद्-भक्तिरसपर्यास्विनीम् ।
तेजस्विनीं भजन्तीं श्री-जिनं मायाविनीं भजे ॥ २० ॥

मंत्रः— ॐ नमो मायाविनोदेव्यै स्वाहा ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ६८ ॥

## ॥ श्री कामाङ्गादेवी पूजा ॥ १५ ॥

का०— ध्यायति या सदाऽर्हन्तं, भक्तानामिष्टसिद्धये ।
संतुष्टमानसीं देवीं, कामाङ्गां पूजये मुदा ॥ १५ ॥

मन्त्रः— ॐ नमः कामाङ्गादेव्यै स्वाहा ।

## ॥ श्री कामबाणादेवी पूजा ॥ १६ ॥

का०— जिनार्चायां समाहूतां शुद्धसम्यक्त्वधारिणीम् ।
कामबाणापहन्त्रीं श्री-कामबाणां समर्चये ॥ १६ ॥

मन्त्रः— ॐ नमः कामबाणादेव्यै स्वाहा ।

## ॥ श्री सानन्दादेवी पूजा ॥ १७ ॥

का०— जिनभक्तिपरां कान्ता, हारनुपूरशोभिताम् ।
सदानन्दप्रदां देवीं, सानन्दां परिपूजये ॥ १७ ॥

मन्त्रः— ॐ नमः सानन्दादेव्यै स्वाहा ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ६७ ॥

॥ श्री अजितादेवी पूजा ॥ १२ ॥

का०— पट्पदीं जिनपादाब्जे, मकराकृतिकुण्डलाम् ।
विघ्नविद्रावणे रक्तां, देवीं तामजितां यजे ॥ १२ ॥

मन्त्रः— ॐ नमोऽजितादेव्यै स्वाहा ।

॥ श्री नित्यादेवी पूजा ॥ १३ ॥

का०— भजन्तीं भुवनाधीशं, भक्तानां भीति भञ्जिकाम् ।
सदा शान्तिकरीं सङ्घे, नित्यादेवीं नमाम्यहम् ॥ १३ ॥

मंत्रः— ॐ नमो नित्यादेव्यै स्वाहा ।

श्री मदद्रवादेवी पूजा ॥ १४ ॥

का०— मिथ्यामततमोहन्त्रीं, जिनेन्द्रमतनिश्चलाम् ।
अभीष्टवरदां देवीं, मदद्रवां नमाम्यहम् ॥ १४ ॥

मंत्रः— ॐ नमो मदद्रवादेव्यै स्वाहा ।

॥ श्री अम्बिकादेवी पूजा ॥ ६ ॥

का०— आम्रगुच्छं करे धृत्वा; सिंहस्थां वरदायिनीम् ।
भजन्तीं नेमिनाथं च, सुरीं सेवे सदाऽम्बिकाम् ॥ ६ ॥

मन्त्रः— ॐ नमोऽम्बिकादेव्यै स्वाहा ।

॥ श्री विजयादेवी पूजा ॥ १० ॥

का०— विजयालङ्कृतां पूतां; विघ्नविध्वंसकारिणीम् ।
प्रणमन्तीं जिनाधीशं; भजेऽविजयां सुरीम् ॥ १० ॥

मंत्रः— ॐ विजयादेव्यै स्वाहा ।

॥ श्री क्लिन्नादेवी पूजा ॥ ११ ॥

का०— नानाभरणशोभाढ्यां; नमन्तीं तीर्थनायकम् ।
क्लिन्नतायालयं कर्त्रीं; क्लिन्नादेवीमुपास्महे ॥ ११ ॥

मंत्रः— ॐ नमः क्लिन्नादेव्यै स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः
॥ ६५ ॥

॥ श्री चण्डीदेवी पूजा ॥ ६ ॥

का०— भुजदण्डप्रचण्डारि–वारिणीं सुखदायिनीम् ।
स्मरन्तीं तीर्थनाथेशं, चण्डीदेवीं प्रपूजये ॥ ६ ॥

मंत्रः— ॐ नम श्चण्डीदेव्यै स्वाहा ।

॥ श्री सरस्वतीदेवी पूजा ॥ ७ ॥

का०— कुन्देन्दुक्षीरशुभ्राभां, जिनेन्द्रवक्त्रवासिनीम् ।
हंसगां पद्मपाणिं च, यजेदेवीं सरस्वतीम् ॥ ७ ॥

मंत्रः— ॐ नमः सरस्वत्यै स्वाहा ।

॥ श्री जयादेवी पूजा ॥ ८ ॥

का०— जयं धर्मस्य कुर्वन्तीं, जिनशासनवल्लभाम् ।
तुष्टि-पुष्टि करीं सङ्घे, जयादेवीं समर्चये ॥ ८ ॥

मंत्रः— ॐ नमो जयादेव्यै स्वाहा ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ६४ ॥

॥ धृति देवी पूजा ॥ ३ ॥

का०— जिनधर्मरतां कीर्ति–धृति–रति–मतिप्रदाम् ।
प्रसन्नवदनाम्भोजां, धृतिदेवीं यजाम्यहम् ॥ ३ ॥

मन्त्रः— ॐ नमो धृतिदेव्यै स्वाहा ।

॥ लक्ष्मी देवी पूजा ॥ ४ ॥

का०— यत्कृपालेशमात्रेण, निर्धनो धनदो भवेत् ।
श्रीजिनार्घागतां सौम्यां, लक्ष्मीदेवीं भजाम्यहम् ॥ ४ ॥

मन्त्रः— ॐ नमो लक्ष्मीदेव्यै स्वाहा ।

॥ श्री गौरीदेवी पूजा ॥ ५ ॥

का०— अणिमादिगुणोपेतां, भास्वद्भृङ्गारपाणिकाम् ।
स्तुवन्तीं वीतरागेशं, गौरींदेवीं सुपूजये ॥ ५ ॥

मंत्रः— ॐ नमो गौरीदेव्यै स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः

॥ ६३ ॥

[ नवमवलयम् ९ ]

## ॥ अथ चतुर्विंशति जिन सेविकादेवी पूजनम् ॥

ॐ नमोऽर्हत्०— ऋषिमण्डलयन्त्रस्था—स्तीर्थपार्हदुपासिकाः ।
सर्वा देव्यः प्रसन्नाः स्यु-र्गृहीत्वा कुसुमाञ्जलिम् ॥ १ ॥

आ काव्य भणी पुष्पांजलि वडे वधाववा । यंत्रमां गंध अने पुष्प, तथा मंडलमां प्रत्येक पूजनमां सोपारी अने पेंडो समर्पण करवो । कुल सोपारी २४, पेंडा २४ ।

॥ श्री देवी पूजा ॥ १ ॥

का०— जिनेन्द्रोयास्तिसंलग्नां, पद्मद्रहनिवासिनीम् ।
सङ्काभीष्टार्थदां नित्यं; श्रीदेवीं पूजयाम्यहम् ॥ १ ॥

**मन्त्रः— ॐ नमः श्रीदेव्यै स्वाहा ।**

॥ ह्री देवी पूजा ॥ २ ॥

का०— जिनेन्द्रदेवसर्वज्ञं, सेवन्तीं भक्तिभावतः ।
महापद्मद्रहावासां, ह्री देवीं परिपूजये ॥ २ ॥

**मन्त्रः— ॐ नमो ह्रीदेव्यै स्वाहा ।**

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ६२ ॥

## ॥ दशदिक्पाल पूजन सामग्री ॥

| क्रमांक | दिक्पाल नाम | वर्ण | पुष्प | नैवेध | फल | गन्ध |
|---|---|---|---|---|---|---|
| १ | इन्द्र | पीत | वर्णानुसार या कोईपण | पतासो छोटो | अखरोट | चंदन केसर |
| २ | अग्नि | रक्त | " | " | " | " |
| ३ | यम | श्याम | " | " | " | " |
| ४ | नैर्ऋत्य | नील | " | " | " | " |
| ५ | वरुण | श्वेत | " | " | " | " |
| ६ | वायु | श्वेत | " | " | " | " |
| ७ | कुबेर | पंचवर्णी | " | " | " | " |
| ८ | ईशान | श्वेत | " | " | " | " |
| ९ | ब्रह्म | श्वेत | " | " | " | " |
| १० | नागेन्द्र | श्याम | " | " | " | " |

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ६१ ॥

॥ श्री ब्रह्म पूजा ॥ ९ ॥

का०— राजहंस समारूढ, ऊर्ध्वलोकाधिपो महान् ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ ९ ॥

मन्त्रः— ॐ चं ब्रह्मणे गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री नागेन्द्र पूजा ॥ १० ॥

का०— पातालाधिपतिः श्यामो, नागेन्द्रः पद्मवाहनः ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ १० ॥

मन्त्रः— ॐ आँ नागेन्द्राय गन्धादिकं समर्पयामीति स्वाहा ।

—ः प्रार्थना ः—

इन्द्रादिदशदिक्पालाः, सम्यग्दृष्टिसुपालकाः ।
शान्ति-तुष्टिं-महापुष्टिं, नित्यं कुर्वन्तु विघ्नहाः ॥ १ ॥

[ इति दिक्पालपूजनम् ]

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः

॥ ६० ॥

॥ श्री वायु पूजा ॥ ६ ॥

का०— ध्वजहस्तो मृगारूढो, वायव्याधिपतिर्मरुत् ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ ६ ॥

मन्त्रः— ॐ यं वायवे गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री कुबेर पूजा ॥ ७ ॥

का०— निधाननवकारूढो, गदायुगुत्तराधिपः ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ ७ ॥

मन्त्रः— ॐ सं कुबेराय गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री ईशान पूजा ॥ ८ ॥

का०— शूलहस्तो वृषारूढ, ऐशान्याश्च दिशोऽधिपः ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ ८ ॥

मन्त्रः— ॐ हं ईशानाय गन्धादिकं समर्पयामीति स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः
॥ ५६ ॥

॥ श्री यम पूजा ॥ ३ ॥

का०— यमस्तु महिषारूढो, दक्षिणाशापतिर्महान् ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ ३ ॥

मंत्रः— ॐ शं यमाय गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री नैर्ऋत्य पूजा ॥ ४ ॥

का०— नैर्ऋतीशः शवारूढो, निर्ऋतिः खड्गहस्तकः ।
पूजामादाय माङ्गल्य तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ ४ ॥

मंत्रः— ॐ षं नैर्ऋतये गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री वरुण पूजा ॥ ५ ॥

का०— वरुणस्तु प्रतीचीशो, नक्रस्थः पाशधारकः ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ ५ ॥

मन्त्रः— ॐ वं वरुणाय गन्धादिकं समर्पयामीति स्वाहा ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः

॥ ५८ ॥

[ अष्टमवलयम् ८ ]

## ॥ अथ दशदिक्पाल पूजनम् ॥

ॐ नमोऽर्हत्०— इन्द्रा-ग्नि--यम--नैर्ऋत्य--वरुण--वायु--वित्तदाः ।
ईशान-ब्रह्म-नागेन्द्रा, दिक्पालाः सन्तु शान्तिदाः ॥ १ ॥

आ काव्य भणी दिक्पालोंने पुष्पांजलि वडे वधाववां।
प्रत्येक दिक्पाल पूजन वखते यंत्रमां गन्ध अने पुष्प तथा मण्डलमां १० अखरोट अने १० पताई ।

॥ श्री इन्द्र पूजा ॥ १ ॥

का०— इन्द्र ऐरावतारूढः, पूर्वेशो वज्रधारकः ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ १ ॥

मंत्रः— ॐ क्षः इन्द्राय गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री अग्नि पूजा ॥ २ ॥

का०— अग्नीशः शक्तिहस्तश्च, पावको मेष वाहनः ।
पूजामादाय माङ्गल्य-तुष्टि-पुष्टि-प्रदोऽस्तु नः ॥ २ ॥

मंत्रः— ॐ रंः अग्नये गन्धादिकं समर्पयामीति स्वाहा ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ५७ ॥

## ॥ नवग्रह पूजन सामग्री ॥

| क्रमांक | ग्रहों ना नाम | वर्ण | गन्ध | पुष्प | फल | नैवेध |
|---|---|---|---|---|---|---|
| १ | सूर्य | रक्त | चंदन अने केसर | वर्णानुसार मले तो लाल | खारेक | साकर नो टुकडो |
| २ | चन्द्र | श्वेत | " | सफेद | " | " |
| ३ | मंगल | रक्त | " | लाल | " | " |
| ४ | बुध | नील | " | मरवो | " | " |
| ५ | बृहस्पति | पीत | " | पीलुं | " | " |
| ६ | शुक्र | श्वेत | " | श्वेत | " | " |
| ७ | शनि | कृष्ण | " | मरवो | " | " |
| ८ | राहु | " | " | " | " | " |
| ९ | केतु | " | " | " | | |

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ५६ ॥

॥ श्री राहु पूजा ॥ ८ ॥

का०— कन्याराशिपतिं राहु, श्यामं चन्द्रार्कमर्दनम् ।
भक्तं श्री नेमिनाथस्य; सेवेऽहं सुखहेतवे ॥ ८ ॥

मंत्रः– ॐ ह्रों ठाँ श्रां त्रः त्रः त्रः पिङ्गलनेत्राय कृष्णरूपाय राहवे गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री केतु पूजा ॥ ९ ॥

का०— श्रीमल्लेः पार्श्वनाथस्य; किंकरं केतुमद्भुतम् ।
श्रेयसे सर्वसङ्घस्य, पूजये प्रीतमानसः ॥ ९ ॥

मंत्रः– ॐ काँ कीं कें टः टः टः छत्ररूपाय राहुतनवे केतवे गन्धादिकं समर्पयामीति स्वाहा ।

—:: प्रार्थना ::—

का०— ऋषिमण्डलयन्त्रस्य; पूजनेऽत्र सुपूजिताः ।
ग्रहाः सर्वे प्रसन्नाः स्यु-र्विघ्नहाः शान्तिदाः सदाः ॥१॥

॥ इति नवग्रहपूजनम् ॥

卐

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ५५ ॥

॥ श्री बृहस्पति पूजा ॥ ५ ॥

का०— पीतो मीन-धनुर्नाथो, देवाचार्यो बृहस्पतिः ।
अष्टानां वृषभादीनां, जिनानां सेवकोऽस्तु ॥ ५ ॥

मंत्रः- ॐ ग्राँ ग्रीँ ग्रूँ बृहस्पतये सुरपूज्याय गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री शुक्र पूजा ॥ ६ ॥

का०— वन्दे वृष-तुलाधीशं, दैत्याचार्यं च भार्गवम् ।
सुविधिनाथसेवायां, संसक्तं स्फटिकोज्ज्वलम् ॥ ६ ॥

मंत्रः- ॐ यः अमृताय, अमृतवर्षणाय दैत्यगुरवे गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री शनैश्चर पूजा ॥ ७ ॥

का०— मकर-कुम्भराशीशं, कृष्णवर्णं शनैश्चरम् ।
मुनिसुव्रतनाथस्यो-पासकं पूजये मुदा ॥ ७ ॥

मंत्रः- ॐ शनैश्चराय क्राँ क्रीँ ह्रीँ क्रौँ डाय गन्धादिकं समर्पयामीति स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ५४ ॥

॥ श्री चन्द्र पूजा ॥ २ ॥

का० — श्वेताभं कर्कराशीशं क्षीरसागरसंभवम् ।
चन्द्रप्रभजिनेन्द्रस्य, सेवकं चन्द्रमर्चये ॥ २ ॥

मंत्रः- ॐ रोहिणीपतये चन्द्राय ॐ ह्रीँ ह्रौँ द्रौँ चन्द्राय गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री मंगल पूजा ॥ ३ ॥

का०— मेषालीशः सनोद्धाद्, रक्तवर्णो धराङ्गजः ।
वासुपूज्यश्च यत्पूज्यो, मङ्गलो मङ्गलं मुदा ॥ ३ ॥

मंत्रः- ॐ नमो भूमिपुत्राय भूभृकुटिलनेत्राय वक्रवदनाय द्रः सः मङ्गलाय गन्धादिकं समर्पयामीति स्वाहा ।

॥ श्री बुध पूजा ॥ ४ ॥

का० — कन्या-मिथुनराशीशं, बुधं शुद्धं च नीलभम् ।
विमलादिजिनेन्द्राणां-मष्टानां सेवकं यजे ॥ ४ ॥

मंत्रः- ॐ नमो बुधाय श्राँ श्रौँ श्रः द्रः गन्धादिकं समर्पयामीति स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः

॥ ५३ ॥

[ सप्तमवलयम् ७ ]

## ॥ अथ नवग्रह पूजनम् ॥

ॐ नमोऽर्हत्०— रवीन्दू मङ्गलो बुद्धो, गुरुः शुक्रः शनैश्वरः ।
राहुः केतुरिति ख्याताः ग्रहाः सन्तु सुखप्रदाः ॥ १ ॥

आ काव्य भणी ग्रहमण्डल ने पुष्पांजलि वडे वधाववु ।

॥ श्री सूर्य पूजा ॥ १ ॥

का०— रक्ताभं सिंहराशीशं, सहस्त्रांशुं तमोऽपहम् ।
पद्मप्रभजिनेन्द्रस्य, भक्तं श्री भास्करं भजे ॥ १ ॥

मंत्रः— ॐ ह्रीँ रत्नांकसूर्याय सहस्त्रकिरणाय गन्धादिकं समर्पयामीति स्वाहा ।

प्रत्येक ग्रह पूजन वखते मंत्र मां गन्ध अने पुष्प वडे तथा मंडलमां साकरनो टुकडो १ अने खारेक १ थी पूजन करवुं । कुल साकरना टुकडा अने खारेक ९ (नव) ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ५२ ॥

॥ श्री वैरोट्यादेवी पूजा ॥ ३ ॥

ॐ नमोऽर्हत्०— वरहस्ता च वैरोटया, धरणेन्द्र प्रियाऽपरा ।
मेघश्यामा महादेवी, हन्तु विघ्नान् निरन्तरम् ॥ ३ ॥

मंत्रः— ॐ श्री धरणेन्द्रद्वितीयप्रियायै वैरोट्यादेव्यै स्वाहा ।

ऊपर नुं काव्य अने मंत्र भणी यंत्र मां गंध अने मरवानु पुष्प । मंडलमां लीलु श्रीफल १, अडदनो लाडु १, तथा रु० १) समर्पण करवो ।

॥ इति धरणेन्द्रदेवादिपूजनम् ॥

[ इति षष्ठवलयम् ६ ]

卐

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ५१ ॥

[ षष्ठवलयम् ६ ]

## ॥ अथ धरणेन्द्रदेवादि पूजनम् ॥

॥ श्री धरणेन्द्रदेव पूजा ॥ १ ॥

ॐ नमोऽर्हत्०— ऋषिमण्डलयन्त्रस्या–धिष्ठाता गजवाहनः ।
धरणेन्द्रश्च निस्तन्द्रः, करोतु सुखसम्पदम् ॥ १ ॥

मंत्रः— ॐ श्री ऋषिमण्डलाधिष्ठायकधरणेन्द्राय स्वाहा ।

ऊपर नुं काव्य अने मंत्र बोली यंत्र मां गन्ध अने चंपानुं पुष्प । मंडलमां लीलुं श्रीफल १, बुंदी नो लाड्डू १, रु० १) । तथा श्री पद्मावतीदेवी नी पूजा पण आ प्रमाणे सामग्री वडे करवी ।

॥ श्री पद्मावती पूजा ॥ २ ॥

ॐ नमोऽर्हत्०— धरणेन्द्र प्रियादेवी, पद्मावती चतुष्करा ।
कुर्कुटनागयाना मां, त्रिफणालङ्कृताऽवतु ॥ २ ॥

मंत्रः— ॐ श्री धरणेन्द्रमुख्यप्रियायै पद्मावतीदेव्यै स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ५० ॥

का०—॥११॥ सार्धत्रिहस्तवस्तुषु चक्रिसैन्यसमाश्रयान् ।
क्षेत्राक्षीणर्द्धिसम्प्राप्तान्, महर्षीन् पूजये मुदा ॥ ११ ॥

मंत्रः— ॐ क्षेत्राक्षीणर्द्धिप्राप्तेभ्यः स्वाहा ।

का०—॥१२॥ प्रासुकद्रव्यभाण्डाना—मक्षीणत्वविधायिनः ।
अक्षीणानर्द्धि-सम्प्राप्तान्, महर्षीन् पूजये मुदा ॥ १२ ॥

मंत्रः— ॐ अक्षीणमहानसर्द्धि प्राप्तेभ्यः स्वाहा ।

—ः प्रार्थना ः—

द्वादशलब्धिसम्पन्नान्, श्री ऋषिमण्डले गतान् ।
महर्षीन् परमानन्द-प्रदाँस्तान् प्रणिदध्महे ॥ १ ॥

॥ इति द्वादशलब्धिधारक महर्षि पूजनम् ॥

[ इति पञ्चमवलयम् ]

का०—॥ ७ ॥ लब्धानन्तसुतत्वान् वै, पारगान् भवतारकान् ।
अनन्तावधि सम्प्राप्तान्, महर्षीन् पूजये मुदा ॥ ७ ॥

मन्त्रः— ॐ अनन्तावध्यर्द्धिप्राप्तेभ्यः स्वाहा ।

का०—॥ ८ ॥ सप्तधा तपसो भेद-धारकान् पापनाशकान् ।
तपोलब्धिपरिप्राप्तान्, महर्षीन् पूजये मुदा ॥ ८ ॥

मन्त्रः— ॐ तप ऋद्धि प्राप्तेभ्यः स्वाहा ।

का०—॥ ९ ॥ क्षीर—घृत—मधु—श्रावि; शुद्धश्रावर्द्धिसंयुतान् ।
रसलब्ध्यर्द्धिसम्पन्नान्, महर्षीन् पूजये मुदा ॥ ९ ॥

मन्त्रः— ॐ रसर्द्धिप्राप्तेभ्यः स्वाहा ।

का०—॥ १० ॥ अनेकवैक्रियाकार—करणे शक्तमानसान् ।
वैक्रियर्द्धि परिप्राप्तान्, महर्षीन् पूजये मुदा ॥ १० ॥

मन्त्रः— ॐ वैक्रियर्द्धि प्राप्तेभ्यः स्वाहा ।

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः

॥ ४८ ॥

का०—॥ ३ ॥ परब्रह्मणिसंलीना—नसंख्यात भवच्छिदः ।
परमावधिसम्पन्नान्, महर्षीन् पूजये मुदा ॥ ३ ॥

मन्त्रः— ॐ परमावधिप्राप्तेभ्यः स्वाहा ।

का०—॥ ४ ॥ सूक्ष्माणुदर्शनप्राप्त—परमानन्दनन्दितान् ।
सर्वावध्यर्द्धिसम्पन्नान्, महर्षीन् पूजये मुदा ॥ ४ ॥

मन्त्रः— ॐ सर्वावध्यर्द्धिप्राप्तेभ्यः स्वाहा ।

का०—॥ ५ ॥ चतुर्विधमहाबुद्धि—नीरधिपारमश्वकान् ।
बुद्ध्यर्द्धिवृद्धिसम्पन्नान्, महर्षीन् पूजये मुदा ॥ ५ ॥

मन्त्रः— ॐ बुद्ध्यर्द्धिप्राप्तेभ्यः स्वाहा ।

का०—॥ ६ ॥ शरीरमलसम्पर्कात्, सर्वरोगापहारकान् ।
सर्वौषध्यर्द्धिसंयुक्तान्, महर्षीन् पूजये मुदा ॥ ६ ॥

मन्त्रः— ॐ सर्वौषध्यर्द्धिप्राप्तेभ्यः स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ४७ ॥

[ पञ्चमवलयम् ५ ]

## ॥ अथ द्वादशलब्धिधारक महर्षि पूजनम् ॥

ॐ नमोऽर्हत्०— सार्वश्रुतावधिलब्धि–प्रमुखव्रतलब्धिकाः ।
मुक्त्यैमहर्षयः सन्तु, समादाय सुमाञ्जलिम् ॥ १ ॥

[ यंत्र मां गंध अने जासुद ना १२ पुष्पो । मंडलमां दाडम १२, पेंडा १२, प्रत्येक पूजनमां काव्य अने मंत्र भणीने समर्पण करवां । ]

काव्यम्:—॥ १ ॥ द्वादशाङ्गश्रुतादयेषां, प्रादुर्बभूव योऽवधिः ।
तान् श्रुतावधिसम्प्राप्तान्, महर्षीन् पूजये मुदा ॥ १ ॥

मन्त्रः— ॐ श्रुतावधिप्राप्तेभ्यः स्वाहा ।

का०—॥ २ ॥ अनुगाम्यादिषड्भेद–धरा ये मुनि पुङ्गवाः ।
देशावध्यर्द्धिसम्प्राप्तान्, महर्षीन् पूजये मुदा ॥ २ ॥

मन्त्रः— ॐ देशावध्यर्द्धिप्राप्तेभ्यः स्वाहा ।

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ४६ ॥

॥ श्री ज्योतिष्कदेव पूजा ॥ ३ ॥

ॐ नमोऽर्हत्०— कान्तकान्तिमतोदेवान्; ज्योतिष्कान् सचराचरान् ।
समर्चयामि सानन्दं, जिनेन्द्रोपासनारतान् ॥ ३ ॥

मंत्रः— ॐ ह्रीँ नमः श्री ज्योतिष्केन्द्रेभ्यः स्वाहा । (पूर्ववत्)

॥ श्री वैमानिकदेव पूजा ॥ ४ ॥

ॐ नमोऽर्हत्०— प्रचुरपुण्यसंभार–सारसातोदयान्वितान् ।
वैमानिकसुगीर्वाणान्, जिनभक्तान् समर्चये ॥ ४ ॥

मंत्रः— ॐ ह्रीँ नमः श्री कल्पेन्द्रेभ्यः स्वाहा । (पूर्ववत्)

—ः प्रार्थना ः—

श्री भवनपतीन्द्राश्च, ज्योतिष्काश्च पुरन्दराः ।
व्यन्तरेन्द्रा विमानेन्द्राः, सर्वे सन्तु सुखप्रदाः ॥ १ ॥

॥ इति चतुर्निकायदेवपूजनम् ॥

[ यंत्रस्य चतुर्दिक्षु ]

॥ अथ चतुर्निकायदेवपूजनम् ॥

ॐ नमोऽर्हत्०— चतुर्निकायदेवेन्द्रा, ये चतुःषष्टिसंख्यकाः ।
स्वीकुर्वन्तु मुदा सर्वे, ते तुष्टाः कुसुमाञ्जलिम् ॥ १ ॥

पुष्पांजलि वडे वधावे—

श्री भवनपतिदेव पूजा ॥ १ ॥

ॐ नमोऽर्हत्०— भवनवासिनो देवान्, स्फारशृङ्गारभासुरान् ।
पूजयामीन्द्र संयुक्तान्, जिनेन्द्रचरणेनतान् ॥ १ ॥

मंत्रः— ॐ ह्रीँ नमः श्री भवनेन्द्रेभ्यः स्वाहा ।

[ यंत्र मां गन्ध-पुष्प । मंडलमां सफरजन ४ अने पेंडा ४ थी पूजन करवुं ]

श्री व्यन्तरदेव पूजा ॥ २ ॥

ॐ नमोऽर्हत्०— आशुतोषाद्भुताकारान्, वराङ्गरूपधारकान् ।
जिनभक्तौ सदा रक्तान्; व्यन्तरान् समुपास्महे ॥ २ ॥

मंत्रः— ॐ ह्रीँ नमः श्री व्यन्तरेन्द्रेभ्यः स्वाहा । (पूर्ववत्)

श्री ऋषि मण्डल महायन्त्र पूजनविधिः ॥ ४४ ॥

॥ अथ श्री गौतम गणधर पूजनम् ॥

ॐ नमोऽर्हत्०— गौतमाऽऽख्यं गणाधीशं, वीर पट्टे विभूषितम् ।
अनन्तलब्धिसम्पन्नं, वन्देऽहं मुक्तिदायकम् ॥ १ ॥

मंत्रः— ॐ नमो गणाधिपति श्री गौतमस्वामिने गन्धादिकं यजामहे स्वाहा ।
यंत्र मां गन्ध-चंपानुं पुष्प । मंडलमां श्रीफल १, बुंदीनो लाडु १, मोसंबी १, रु० १ )

॥ अथ गुरुपादुका पूजनम् ॥ २ ॥

ॐ नमोऽर्हत्०— यद्दयादृष्टिमात्रेण, दोपा यान्ति दिगन्तरम् ।
प्रकाशन्ते गुणाः सर्वे, तस्मै श्रीगुरवेनमः ॥ २ ॥

मंत्रः— ॐ अर्हदादिपरमेष्ठिपञ्चकगुरुपादुकाभ्यो गन्धादिकं यजामहे स्वाहा ।
यंत्रमां गन्ध—जासूदनुं पुष्प । मंडलमां श्रीफल १, दाडम १, चूरमानो लाडु १, रु० १ )
( यंत्र नी जमणी बाजु गणधर पूजन अने यंत्र नी डाबी बाजु गुरु पादुका पूजन करवुं )

॥ इति गणधर-गुरुपादुका पूजनम् ॥

卐

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः

॥ ४३ ॥

॥ पिण्डाक्षर पूजन सामग्री ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| क्रमांक— | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| वर्ग— | अवर्ग | कवर्ग | चवर्ग | टवर्ग | तवर्ग | पवर्ग | यवर्ग | शवर्ग |
| लीली द्राक्ष नंग ४६— | १६ द्राक्ष | ५ | ६ | ५ | ५ | ६ | ४ | ४ |

卐

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ४२ ॥

॥ ७ ॥ ॐ नमोऽर्हत्०— मन्त्रविद्भिर्मतं चैतत्, सप्तेतिभयशान्तये ।
य-वर्गसंयुतं ध्याये, स्--पिण्डाक्षरमर्चये ॥ ७ ॥

मंत्रः– ॐ (नमः) यवर्गाय स्ल्राँ स्ल्रां स्ल्रूँ स्ल्रौं स्ल्रः स्म्ल्व्र्यूं स्वाहा । (पूर्ववत्)

॥ ८ ॥ ॐ नमोऽर्हत्०— पीयूषसन्निभं शान्त्यै, काश-श्वासादिरोगिणाम् ।
श-वर्गसंयुतं ध्याये, ख--पिण्डाक्षरमर्चये ॥ ८ ॥

मंत्रः– ॐ (नमः) शवर्गाय ख्ल्राँ ख्ल्रों ख्ल्रूँ ख्ल्रौं ख्ल्रः ख्म्ल्व्र्यूं स्वाहा । (पूर्ववत्)

—:: प्रार्थना ::—

हकारादि-खकारान्त-पिण्डाक्षरस्थिताः सुराः ।
गन्धाद्यैः पूजिताः सन्तु, श्रुतबोधार्थसिद्धये ॥ १ ॥

॥ इति चतुर्थवलयम् ॥ ४ ॥

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
॥ ४१ ॥

॥ ३ ॥ ॐ नमोऽर्हत्०— सद्बीजं सर्वतन्त्राऽऽख्यं, सदा योगीन्द्रसेवितम् ।
चवर्गसंयुतं ध्याये, म--पिण्डाक्षरमर्चये ॥ ३ ॥

मंत्रः— ॐ (नमः) चवर्गाय म्राँ म्रीँ म्रूँ म्रौँ म्रः म्म्ल्व्र्यूँ स्वाहा । (पूर्ववत्)

॥ ४ ॥ ॐ नमोऽर्हत्०— हतमिथ्यातमोराशिं, मुनीनां मोदनापकम् ।
ट--वर्गसंयुतं ध्याये, र--पिण्डाक्षरमर्चये ॥ ४ ॥

मंत्रः— ॐ (नमः) टवर्गाय राँ रीँ रूँ रौँ रः र्म्ल्व्र्यूँ स्वाहा । (पूर्ववत्)

॥ ५ ॥ ॐ नमोऽर्हत्०— दुःसाध्यसर्वरोगाणां, शामकं सुखदं परम् ।
त--वर्गसंयुतं ध्याये, ध--पिण्डाक्षरमर्चये ॥ ५ ॥

मंत्रः— ॐ (नमः) त-वर्गाय ध्राँ ध्रीँ ध्रूँ ध्रौँ ध्रः ध्म्ल्व्र्यूँ स्वाहा । (पूर्ववत्)

॥ ६ ॥ ॐ नमोऽर्हत्०— जाङ्गुल्यादिमहाविद्या, सिद्धये मन्त्रमुत्तमम् ।
प-वर्ग संयुतं ध्याये, झ- पिण्डाक्षरमर्चये ॥ ६ ॥

मंत्रः— ॐ (नमः) पवर्गाय झ्राँ झ्रीँ झ्रूँ झ्रौँ झ्रः झ्म्ल्व्र्यूँ स्वाहा । (पूर्ववत्)

श्री ऋषि
मण्डल
महायन्त्र
पूजनविधिः
४० ॥

[ चतुर्थवलयम् ४ ]

## ॥ अथ पिण्डाक्षर पूजनम् ॥

ॐ नमोऽर्हत्०— हकारादि–खकारान्त–पिण्डवर्णस्थदेवताः ।
समागत्यात्र पूजायां गृह्णन्तु कुसुमाञ्जलिम् ॥ १ ॥

आ काव्य भणी चतुर्थवलय ने पुष्पांजलि वडे वधावे ।

॥ १ ॥ ॐ नमोऽर्हत्०— अशेषरौद्रविघ्नौघ–शमनं शिवदं नृणाम् ।
अवर्गसंयुतं ध्याये, ह-पिण्डाक्षरमर्चये ॥ १ ॥

मंत्रः– ॐ (नमः) अवर्गाय ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः ह्म्ल्व्र्यूँ स्वाहा ।

आ काव्य अने मन्त्र भणी यंत्र मां गन्ध-पुष्प अने मंडलमां लीली द्राक्ष अर्पण करवी ।

॥ २ ॥ ॐ नमोऽर्हत्०— आधिव्याधिहरं सारं, शरणं सर्वदेहिनाम् ।
कवर्गसंयुतं ध्याये, भ–पिण्डाक्षरमर्चये ॥ २ ॥

मंत्रः– ॐ (नमः) कवर्गाय भ्राँ भ्रीँ भ्रूँ भ्रौँ भ्रः भ्म्ल्व्र्यूँ स्वाहा । (पूर्ववत्)

